वर्ष्मन् दिवो नाभा पृथिव्या यथायं यजमानो न रिष्येत्॥ [TB 3.7.7.13,14]
एत देवेभ्यो जुष्टमदित्या उपस्थे ।
इमां देवा अजुषन्त सर्वे ।
रायस्पोषा यजमानं विशन्तु ॥

इति ॥ ६ ॥ अथास्या उत्तमां त्वचँ संहृत्योत्करं गमयति ॥ ७ ॥ अथैनां खनति द्व्यङ्गुलं त्र्यङ्गुलं चतुरङ्गुलं वा सीतामात्रीँ रथवर्त्ममात्रीं यावत् पार्ष्णयाः श्वेतं तावतीं वा—देवस्य सवितुः सवे कर्म कृण्वन्ति वेधसः [1. 1. 9*t*] इति ॥ ८ ॥ मूलं छिनत्ति ॥ ९ ॥ आ प्रतिष्ठायै खनति ॥ १० ॥ प्राञ्चौ वेद्यँसावुन्नयत्यभित आहवनीयं प्रतीची श्रोणी अभितो गार्हपत्यम् ॥ ११ ॥ मध्ये संनतां प्राचीमुदीचीं प्रवणां पुरस्तादँहीयसीं पश्चात् प्रथीयसीं दक्षिणतो वर्षीयसीं पुरीषवतीं करोति ॥ १२ ॥ यत् पुरीषमतिशेत उत्करं[1] तद् गमयति ॥ १३ ॥ यत् तृणं मूलं वातिशेते स्फ्येन तच्छिनत्ति न नखेन ॥ १४ ॥ ॥ २ ॥

आहार्यपुरीषां पशुकामस्य वेदिं कुर्यात्[2] खननपुरीषां प्रजाकामस्येति विज्ञायते ॥ १ ॥ उद्धुप्य नित्यमन्यदावपेदित्येकमखातायामेवान्यदावपेदित्यपरम् ॥ २ ॥ यत्र खनेत् तत्र खननमन्त्रं जपेत् ॥ ३ ॥ अधिश्रितेषु हविष्षु पौर्णमास्यां वेदिं कुर्यात् ॥ ४ ॥ पूर्वेद्युः प्राग् बर्हिष आहरणादमावास्यायाम् ॥ ५ ॥ यत् प्रागुत्तरस्मात् परिग्राहात् तत् कृत्वोपवसति ॥ ६ ॥ समानमितरत् ॥ ७ ॥ ब्रह्माणमामन्त्रयते—ब्रह्मन्नुत्तरं परिग्राहं परिग्रहीष्यामि इति ॥ ८ ॥ प्रसूतो ब्रह्मणा स्फ्येन वेदिं परिगृह्णाति—ऋतमसि [l. c. *u*] इति दक्षिणतः ऋतसदनमसि [l. c.] इति पश्चात् ऋतश्रीरसि [l. c. *v*] इत्युत्तरतः ॥ ९ ॥ अथैनाँ स्फ्येन प्रतीचीं योयुप्यते—धा असि स्वधा असि [l. c.] इति ॥ १० ॥ अनुवाकशेषेण पश्चार्धे वितृतीयदेशे वेदेः स्फ्यं तिर्यञ्चँ स्तब्ध्वा संप्रेष्यति—प्रोक्षणीरासादयेध्माबर्हिरुपसादय ॥ स्रुवं च स्रुचश्च संमृड्ढि ॥ पत्नीँ संनह्याज्येनोदेहि इति ॥ ११ ॥ आग्नीध्र एतानि कर्माणि कुर्यादित्येकमध्वर्युरित्यपरम् ॥ १२ ॥ उपनिनीय प्रोक्षणीः स्फ्यस्य वर्त्मन् दक्षिणेन स्फ्यमसँस्पृष्टा बर्हिरासादयति ॥ १३ ॥ यं द्विष्यात् तं ध्यायेत् ॥ १४ ॥ उत्करे पुरस्तात् प्रत्यञ्चँ स्फ्यमुदस्यति—शतभृष्टिरसि वानस्पत्यो द्विषतो वधः [2. 6. 4. 1] इति ॥ १५ ॥ यं द्वेष्टि तस्य नाम गृह्णाति ॥ १६ ॥ हस्ताववनिज्य स्फ्यं प्रक्षालयति । नाग्रं प्रतिमुञ्चति ॥ १७ ॥ वेदिं कृत्वा नानवनिज्य हस्तौ पात्राणि

1 D °रे
2 Gb om.
3 DbGc °प्र°

पराहरण्यात् ॥ १८ ॥ उत्तरेण प्रणीताः पश्चात् प्रागग्रमिध्माबर्हिषी[1] उपसादयति ॥ १६ ॥ ॥ ३ ॥

दक्षिणमिध्ममुत्तरं बर्हिः ॥ १ ॥ स्रुवं च स्रुचश्च[2] प्राशित्रहरणं चादाय गार्हपत्ये वाहवनीये वा निष्टपति—प्रत्युष्टँ रक्षः प्रत्युष्टा अरातयः [1.1.10*a*] इति ॥ २ ॥ वेदाग्रैः प्रतिविभज्य संमार्ष्टि । अप्रतिविभज्य वा ॥ ३ ॥ स्रुवमग्र उत्तानं धारयमाणो ऽग्नेरन्तरतो ऽभ्याकारँ सर्वतो बिलमभिसमाहारं तथैव दण्डम्—गोष्ठं मा निर्मृक्षम् [l. c. *c*] इति ॥ ४ ॥ जुहूँ[3] संमार्ष्ट्युत्तानां धारयमाणो ऽग्नेरन्तरतो ऽभ्याकारं प्राचीं[3] मध्यैर्बाह्यतः प्रतीचीं मूलैर्दण्डम्—वाचं प्राणं मा निर्मृक्षम् [l. c. *d*] इति ॥ ५ ॥ उपभृतँ संमार्ष्टि तिरश्चीं धारयमाणो ऽग्नेरन्तरतो ऽभ्याकारं प्रतीचीं मध्यैर्बाह्यतः प्राचीं मूलैर्दण्डम्—चक्षुः श्रोत्रं मा निर्मृक्षम् [l. c.] इति ॥ ६ ॥ यथा स्रुवं तथा ध्रुवाम्—प्रजां योनिं मा निर्मृक्षम् [l. c.] इति ॥ ७ ॥ रूपं वर्णं मा निर्मृक्षम् ॥ वाजिनं[4] त्वा सपत्नसाहँ संमार्ज्मि [l. c. *c*] इति प्राशित्रहरणम् ॥ ८ ॥ न संमृष्टानि चासंमृष्टानि च सँस्पर्शयेत् ॥ ६ ॥ यदि सँस्पर्शयेत् पुनरेव निष्टप्य संमृज्यात् ॥ १० ॥ संमृष्टानि निष्टपति—अग्नेर्वस्तेजिष्ठेन तेजसा निष्टपामि [l. c. *b*] इति ॥ ११ ॥ ॥ ४ ॥

अथैतानि संमार्जनान्यद्भिः सँस्पृश्याग्नौ प्रहरति ॥ १ ॥ यतरस्मिन् निष्टपति[5]—

दिवः शिल्पमवततं पृथिव्याः ककुभि श्रितम् ।

तेन वयँ सहस्रवल्शेन सपत्नं नाशयामसि स्वाहा ॥ [TB 3. 3. 2. 1]

इति ॥ २ ॥ उत्करे वोदस्यति ॥ ३ ॥ पत्नीमूर्ध्वज्ञुमासीनाँ संनह्यति तिष्ठन्तीं वा । स्वयं वा पत्न्यात्मानं मौञ्जेन योक्त्रेणान्यतरतः पाशेनाभ्यन्तरं वाससो बाह्यतो वा—आशासाना सौमनसम् [1. 1. 10*e*] इति ॥ ४ ॥ उत्तरेण नाभिं निष्कर्ष्य ग्रन्थिं कृत्वा दक्षिणतो नाभेः पर्यूहते ॥ ५ ॥ अग्ने गृहपते उप मा ह्वयस्व इति गार्हपत्यमभिमन्त्रयते ॥ ६ ॥ देवानां पत्नीरुप मा ह्वयध्वम् इति देवपत्नीरपरेण गार्हपत्यम् ॥ ७ ॥ देवपत्न्या लोकमुपतिष्ठते[6]—पत्नि पत्न्येष ते लोको नमस्ते अस्तु मा मा हिँसीः इति ॥ ८ ॥ देशाद् दक्षिणत उदीच्युपविशति—

इन्द्राणीवाविधवा भूयासमदितिरिव सुपुत्रा ।

1 G प्राग् for प्रागग्रम्
2 DaGac add स, Db add -मस-
3–3 D जुहूमुत्तानां संमार्ष्टि प्राचीं
4 DGb वाजि
5 Gb संमार्ष्टि
6 G लोक उ०

अस्थूरि त्वा गार्हपत्योपनिषदे सुप्रजास्त्वाय ॥ [TB 3. 7. 5. 10,11]

**इति ॥ ९ ॥ गार्हपत्यमभिमन्त्रयते**—सुप्रजसस्त्वा वयम् [1. 1. 10*f*] **इत्येतया ॥ १० ॥**

मम पुत्राः शत्रुहणो अथो मे दुहिता विराट् ।

उताहमस्मि संजया पत्युर्मे श्लोक उत्तमः ॥

**इति च ॥ ११ ॥** पूषा ते बिलं विष्यतु **इति सर्पिर्धानस्य बिलं विष्यति ॥ १२ ॥** अदितिरस्यच्छिद्रपत्त्रा[1] **स्थाल्य स्थालीमादाय ॥ १३ ॥ ॥ ५ ॥**

**तस्यां पवित्रान्तर्हितायां प्रभूतमाज्यं निर्वपति**—महीनां पयो ऽस्योषधीनाँ रसस्तस्य ते ऽक्षीयमाणस्य निर्वपामि देवयज्यायै [TB. 3. 3. 3. 5] **इति ॥ १ ॥ दक्षिणाग्नावधिश्रयति**—इदं विष्णुर्वि चक्रमे [1. 2. 13*e*] **इति ॥ २ ॥ विलाप्य वा निर्वपति ॥ ३ ॥** इषे त्वा [1. 1. 1*a*] **इति दक्षिणार्धे गार्हपत्यस्याधिश्रयति ॥ ४ ॥** ऊर्जे त्वा [l. c.] **इत्यपादाय वेदेनोपयम्यै[4] पत्न्या उपयच्छति ॥ ५ ॥ तत् सा निमील्यानुच्छ्वसन्त्यवेक्षते**—महीनां पयो ऽस्योषधीनाँ रसो ऽदब्धेन त्वा चक्षुषावेक्षे सुप्रजास्त्वाय [1.1. 10*k*] **इति ॥ ६ ॥** तेजो ऽसि **इत्युत्तरार्धे गार्हपत्यस्याधिश्रयति ॥ ७ ॥** तेजसे त्वा **इत्यपादाय वेदेनोपहत्योद्धरति**—तेजो ऽसि तेजो ऽनुप्रेहि [l. c. *l*] **इति ॥ ८ ॥ आहवनीये ऽधिश्रयति**—अग्निस्ते तेजो मा वि नैत् [l. c.] **इति ॥ ९ ॥ उत्तरेण प्रोक्षणीः स्फ्यस्य वर्त्मन् सादयति**—अग्नेर्जिह्वासि सुभूर्देवानां धाम्नेधाम्ने देवेभ्यो यजुषेयजुषे भव [l. c. *mn*] **इति ॥ १० ॥ अथैनदध्वर्युश्च[6] यजमानश्च निमील्य वीक्ष्यानुच्छ्वसन्तावीक्षेते**—आज्यमसि [1. 6. 1*b*] **इति प्रतिपद्य** तस्य ते भक्षीय [l. c.] **इत्यन्तेन ॥ ११ ॥ अथैनदुदगग्राभ्यां पवित्राभ्यां पुनराहारं त्रिरुत्पुनाति**—शुक्रमसि ॥ ज्योतिरसि ॥ तेजो ऽसि [1. 1. 10*o*] **इत्येतैर्मन्त्रैः ॥ १२ ॥ आज्यवतीभ्यां पवित्राभ्यां प्रोक्षणीरुत्पुनाति**—देवो वः सवितोत्पुनातु [l. c. *p*] **इति पच्छो गायत्र्या ॥ १३ ॥ ॥ ६ ॥**

**अनिष्कासिना स्रुवेणान्तर्वेद्याज्यानि गृह्णाति ॥ १ ॥ वेदे स्रुचो ऽत्याधाय चतुर्गृहीतं जुह्वाम्**—शुक्रं त्वा शुक्रायां धाम्नेधाम्ने देवेभ्यो यजुषेयजुषे गृह्णामि [l. c. *q*] **इत्येतैरभिर्मन्त्रैः ।** पञ्चानां त्वा वातानाम् [1. 6. 1*c*] **इति चतुर्थम् ॥ २ ॥ एवमे-**

1 Gc °मनुम°
2 Ga °पात्रा, Gc °पवित्रा
3 Ga °त्य
4 Ga वेदेनोपत्या°, Gb वेदेनोपयाम्या°
5 Gb जुहू°
6 Gc °म°
7 Gc °मु°
8 DGa om.
9 Gab ध्रु°

वोत्तरैर्मन्त्रैरुपभृति ध्रुवायामिति गृह्णाति ॥ ३ ॥ अष्टगृहीतमुपभृति चतुर्गृहीतं ध्रुवायां पञ्चगृहीतं पशुकामस्य ॥ ४ ॥ तैरेव मन्त्रैर्यजमानो ऽनुमन्त्रयते[1] ॥ ५ ॥ अपि वाध्वर्यवैरेवाध्वर्युर्गृह्णीयात् ॥ ६ ॥ याजमानैर्यजमानो ऽनुमन्त्रयते ॥ ७ ॥ भूयो जुह्वां गृह्णात्यल्पीय उपभृति भूयिष्ठं ध्रुवायाम् ॥ ८ ॥ समंबिलं धारयमाणो जुह्वां गृह्णाति मध्यदेश उपभृति भूमौ[2] प्रतिष्ठितायां ध्रुवायाम् ॥ ९ ॥ नान्तर्वेदि गृहीत्वा पश्चात् प्रतिहरन्ति[3] ॥ १० ॥ नोत्कर आज्यं किंचन सादयति ॥ ११ ॥ आपो देवीरग्रेपुवः [1. 1. 5$b$] इति प्रोक्षणीरभिमन्त्र्य ब्रह्माणमामन्त्रयते—ब्रह्मन् प्रोक्षिष्यामि इति ॥ १२ ॥ प्रसूतो ब्रह्मणा विषायेध्मं[4] प्रोक्षति—कृष्णो ऽस्याखरेष्ठो ऽग्नये त्वा स्वाहा [1. 1. 11$a$] इति ॥ १३ ॥ वेदिरसि [l. c. $b$] इति वेदिं बर्हिरसि [l. c. $c$] इति बर्हिः । एकैकं त्रिस्त्रिः प्रोक्षति ॥ १४ ॥ अन्तर्वेदि पुरोग्रन्थि[5] बर्हिरासाद्य प्रोक्षति—दिवे त्वा [l. c. $d$] इत्यग्रं अन्तरिक्षाय त्वा [l. c.] इति मध्यं पृथिव्यै त्वा [l. c.] इति मूलम् ॥ १५ ॥ स्रुच्यग्राण्युपपाद्य मूलान्युपपाययति ॥ १६ ॥ ॥ ७ ॥

सहस्रुचा पुरस्तात् प्रत्यञ्चं ग्रन्थिं प्रत्युक्षति—पोषाय त्वा इति ॥ १ ॥ यत् प्रोक्षणीनामुच्छिष्यति[6] तदन्तर्वेदि निनयति—स्वधा पितृभ्यः [l. c. $e$] इति ॥ २ ॥ दक्षिणायै श्रोणेरुपक्रम्योत्तरस्याः संततां धारां स्रावयति[7] ॥ ३ ॥ पूषा ते ग्रन्थिं विष्यतु इति बर्हिर्विस्रँसयति ॥ ४ ॥ ऊर्ध्वं प्राञ्चमुद्गूढं प्रत्यञ्चमायच्छति[8] ॥ ५ ॥ पुरस्तात् प्रस्तरं गृह्णाति । नानुमार्ष्टि न प्रतिमार्ष्टि नावधूनोति । कर्षन्निवापादत्ते[9]—विष्णो स्तूपो ऽसि [l. c. $g$] इति ॥ ६ ॥ तस्मिन् पवित्रे अपिसृजति—

अयं प्राणश्चापानश्च यजमानमपिगच्छताम् ।
यज्ञे ह्यभूतां पोतारौ पवित्रे हव्यशोधने ॥ [TB 3. 7. 4. 12]

इति ॥ ७ ॥ ततः संप्रेष्यति—

स्तृणीत[10] बर्हिः परिधत्त वेदिं जामिं मा हिँसीरमुया शयाना ।
दर्भैः स्तृणीत हरितैः सुवर्णैर्निष्का इमे यजमानस्य ब्रध्ने ॥

1 Gac °येत
2 Gb भूमि-
3 Ga °ति, Gb प्रहरन्ति, Gc परिहरन्ति
4 Ga विस्रस्येध्मं
5 Gb om.
6 Gbc °ष्येत
7 D सावित्र्या वपति
8 D °च्छेत्
9 Da °धत्ते, Db °धाते, Gb °पाङ्के for °पादत्ते
10 D अभिस्तृ°

इति ॥ ८ ॥ **ब्रह्मणे प्रस्तरं प्रयच्छति**[1]—प्राणापानाभ्यां त्वा सतनुं करोमि **इति** ॥ ९ ॥ **ब्रह्मा यजमानाय**—यजमाने प्राणापानौ दधामि **इति** ॥ १० ॥ मयि प्राणापानौ **इति यजमानः प्रत्याह** ॥ ११ ॥ **शुल्बँ स्तृणाति**—ऊर्णाम्रदसं त्वा स्तृणामि [1. 1. 11*h*] **इति** ॥ १२ ॥ **आ दक्षिणायै श्रोणेः**[2] **प्रपाद्योत्तरस्मादँसात् संततँ सर्वस्यां वेद्यां बर्हिः स्तृणाति ब**[3]**लमनतिदृश्नम्**—ऊर्णाम्रदसं त्वा स्तृणामि [l. c.] **इति त्रिधातु पञ्चधातु वा प्रागपवर्गं प्रत्यगपवर्गं वा** ॥ १३ ॥ **अग्रै**[4]**र्मूलान्याच्छादयति** ॥ १४ ॥ ॥ ८ ॥

**धातौधातौ मन्त्रं जपति** ॥ १ ॥ **अत्रैके ऽनूयाजार्थं उल्मुके निरूहन्ति** ॥ २ ॥ **प्रस्तरं धारयमाणो ऽपरेणाहवनीयँ सँस्पृष्टान् परिधीन् परिदधात्युदगग्रं मध्यमम्**—गन्धर्वो ऽसि विश्वावसुः [l. c. *i*] **इति** इन्द्रस्य बाहुरसि [l. c. *k*] **इति दक्षिणं** मित्रावरुणौ त्वा [l. c. *l*] **इत्युत्तरम्** ॥ ३ ॥ **अभ्यग्रमाहवनीयं दक्षिणमवागग्रमुत्तरम्** ॥ ४ ॥ **एवमनु**[5]**वाण्येवैष्वत ऊर्ध्वं कर्माणि क्रियन्ते** ॥ ५ ॥ सूर्यस्त्वा पुरस्तात् पातु [l. c. *m*] **इत्याहवनीयमभिमन्त्र्य मध्ये ऽग्नेरूर्ध्वे आघारसमिधावादधाति** ॥ ६ ॥ वीतिहोत्रं त्वा कवे [l. c. *n*] **इति दक्षिणाम्** ॥ ७ ॥ **तूष्णीमुत्तराम्** ॥ ८ ॥ **बर्हिषः समावनन्तर्गर्भौ**[5] **विधृती कृत्वा मध्ये वेदेरुदीचीनाग्रे निदधाति**—विशो यन्त्रे स्थः [l. c. *o*] **इति** ॥ ९ ॥ **विधृत्योः प्रस्तरँ सादयति**—वसूनाँ रुद्राणामादित्यानाँ सदसि सीद [l. c. *p*] **इति** ॥ १० ॥ **प्रस्तरे जुहूम्**—जुहूरसि घृताची [l. c. *q*] **इति** ॥ ११ ॥ **समं मूलैर्दण्डं करोति** ॥ १२ ॥ **उत्तरेण जुहूमुपभृतं प्रतिकृष्टतरामधस्ताद् विधृत्योः** उपभृदसि [l. c.] **इति** ॥ १३ ॥ **उत्तरेणोपभृतं ध्रुवां प्रतिकृष्टतरामुपरिष्टाद् विधृत्योः** ध्रुवासि [l. c.] **इति** ॥ १४ ॥ **असँस्पृष्टाः सादयति** ॥ १५ ॥ **दक्षिणेन जुहूँ स्रुवँ सादयति । उत्तरेण वा ध्रुवाम्**—ऋषभो ऽसि शाक्वरो घृताचीनाँ सूनुः प्रियेण नाम्ना प्रिये सदसि सीद [TB 3. 7. 6. 10] **इति** ॥ १६ ॥ ॥ ९ ॥

**अथैनाँ अभिमन्त्रयते**—एता असदन् [1. 1. 11*r*] **इत्य**[7]**नुवाकशेषेण** ॥ १ ॥ विष्णूनि स्थ वैष्णवानि धामानि स्थ प्राजापत्यानि **इत्याज्यान्यभिमन्त्रयते** ॥ २ ॥ **स्रुवमाज्यस्थालीं वेदं पात्रीं चादायापरेण गार्हपत्यं**[?] **पविश्य** इदमहँ सेनाया अभीत्वर्यै

1 Gb om.
2 D °णया
3 Gb उपक्रम्योत्त°
4 G °मवाग्र°
5 Ga adds दर्भौ
6 DGac अग्र°
7 D °नम्, Gb °नाम्

मुखमपोह्यामि [TB 3. 7. 5. 1,2] इति वेदेन पुरोडाशात् साङ्गारं भस्मापोह्याभिमन्त्रयते—सूर्यं ज्योतिर्विभाहि महत इन्द्रियाय बलाय इति ॥ ३ ॥ पात्र्यामुपस्तृणाति—

स्योनं ते सदनं करोमि घृतस्य धारया सुशेवं कल्पयामि ।

तस्मिन् सीदामृते[1] प्रतितिष्ठ व्रीहीणां मेध सुमनस्यमानः ॥ [ l. c. 2, 3]

इति ॥ ४ ॥ आज्येनाभिघारयति—

आप्यायतां घृतयोनिरग्निर्हव्यानुमन्यताम् ।

खमङ्क्ष्व त्वचमङ्क्ष्व सुरूपं त्वा वसुविदं

पशूनां तेजसाग्नये जुष्टमभिघारयामि ॥ [l. c. 2]

इति दक्षिणम् । तूष्णीमुत्तरम् ॥ ५ ॥ सांनाय्यमभिघारयति—

यस्त आत्मा पशुषु प्रविष्टो देवानां विष्ठामनु यो वितस्थे ।

आत्मन्वान् सोम घृतवान् हि भूत्वा देवान् गच्छ सुवर्विन्दे[2] यजमानाय मह्यम् ॥

[l. c. 3] इति ॥ ६ ॥ पात्र्यामुद्वासयति—

आर्द्रः प्रथस्नुर्भुवनस्य गोपाः ।

शृत उत्स्नाति जनिता मतीनाम् ॥ [l. c.]

इति ॥ ७ ॥ न पर्यावर्तयति न भिनत्ति ॥ ८ ॥ ॥ १० ॥

इरा भूतिः पृथिव्यै रसो मोत्क्रमीत् [l. c.] इति कपालानि प्रत्यनक्ति ॥ १ ॥ अथैनावपरिवर्गमणिकौ[3]षमनक्ति—देवस्त्वा सविता मध्वानक्तु [1. 3. 5*d*] इति ॥ २ ॥ उपरिष्टादभ्यज्याधस्तादुपानक्ति ॥ ३ ॥ स्वक्रमकूर्मपृषन्तं[4] कृत्वा सांनाय्ये चालंकृत्यान्तर्वेदि चतुर्होत्रा पौर्णमास्याँ हवीँष्यासादयेत् । पञ्चहोत्रामावास्यायाम् ॥ ४ ॥ भूर्भुवः सुवः इति प्रथमायां पौर्णमास्याम् ॥ ५ ॥ संवत्सरे पर्यागत एताभिरेवासादयेत् ॥ ६ ॥ प्रथम एव संवत्सर इत्याश्मरथ्यः । संवत्सरेसंवत्सर इत्यालेखनः ॥ ७ ॥ अपरेण स्रुचः पुरोडाशावासादयति ॥ ८ ॥ मध्ये वेदेः सांनाय्यकुम्भ्यौ संधाय दक्षिणस्यां वेदिश्रोण्यॉं शृतमासादयत्युत्तरस्यां दधि ॥ ९ ॥ अपि वा पूर्वँ शृतमपरं दधीत्येकेषाम् ॥ १० ॥ अग्रेण ध्रुवां वेदँ सादयति—

अयं वेदः पृथिवीमन्वविन्दद् गुहा सतीं गहने गह्वरेषु ।

स विन्दतु यजमानाय लोकमच्छिद्रं यज्ञं भूरिकर्मा करोतु ॥ [TB 3. 7. 6. 13] इति ॥ ११ ॥ वेद्यन्तान् परिस्तीर्य होतृषदनं कल्पयति ॥ १२ ॥ जघनेन

1 D °तं

2 TaitBr. सुवर्विद

3 DGac °निका°

4 DGb स्वक्रकूर्मपृष्टन्तं, Gc स्वक्रं कूर्मपृषदन्तं; Ga missing.

5 D °स°

वेदिमुदगग्रैर्दर्भैः सँस्तीर्णं भवति ॥ १३ ॥ ॥ ११ ॥

ततः संप्रेष्यति—अग्नये समिध्यमानायानुब्रूहि इति ॥ १ ॥ आसीन इध्मं प्रणवेप्रणवे दक्षिणमभ्याधाति ॥ २ ॥ यत्राभिजानाति समिद्धो अग्न आहुत [TB 3. 5. 2. 3] इति तदेकामनूयाजसमिधमवशिष्य सर्वमिध्मशेषमभ्याधाय वेदेनाहवनीयं त्रिरुपवाजयति ॥ ३ ॥ स्रुवेण ध्रुवाया आज्यमादाय वेदेनोपयम्योत्तरं परिधिसंधिमन्ववहृत्य दक्षिणाप्राङ्मासीनः संततमृजुमाघारमाघारयति ॥ ४ ॥ प्रजापतिं मनसा ध्यायन् स्रुवेणाज्यस्थाल्या आज्यमादाय ध्रुवामाप्याययति—आ प्यायतां ध्रुवा घृतेन [1.6.5*a*] इत्येतया ॥ ५ ॥ तत्रैषो ऽत्यन्तप्रदेशो यत्र क्व ध्रुवाया आज्यमादत्त एवमेवैनमाप्याययति। ध्रुवाया एवानादिष्टाज्यार्थाः क्रियन्ते ॥ ६ ॥ ततः संप्रेष्यति—अग्नीत् परिधीँश्चाग्निं च त्रिस्त्रिः संमृड्ढि इति ॥ ७ ॥ सस्फ्यैरिध्मसंनहनैराग्नीध्रः परिधीँश्चाग्निं च त्रिस्त्रिः संमार्ष्टि ॥ ८ ॥ तूष्णीं परिधीन् ॥ ९ ॥ अग्ने वाजजिद् वाजं त्वा सरिष्यन्तं वाजं जेष्यन्तं वाजिनं वाजजितं वाजजित्यायै संमार्ज्म्यग्निमन्नादमन्नाद्याय इत्यग्निँ संमार्ष्टि ॥ १० ॥ अग्रेण जुहूं ध्रुवां चोत्तानौ पाणी प्रतिष्ठाप्य ॥ ११ ॥ ॥ १२ ॥

आहवनीयायाञ्जलिं करोति—भुवनमसि विप्रथस्व ॥ अग्ने यष्टरिदं नमः [1. 1. 12*ab*] इति ॥ १ ॥ जुहूमादत्ते—जुह्वेहि [l. c. *c*] इति । उपभृतम् उपभृदेहि [l. c. *d*] इति ॥ २ ॥ उपभृति जुहूमत्यादधाति—सुयमे मे अद्य घृताची भूयास्तँ स्वावृतौ सूपावृतौ इति ॥ ३ ॥ तत्रैषो ऽत्यन्तप्रदेशो यत्र क्वोपभृति जुहूमत्यादधाति मुखत एवाध्यूहति मुखत उपावहरति ॥ ४ ॥ न च सँश्लेषयति नाभिदेशे च स्रुचौ धारयते ॥ ५ ॥ समं प्राणैरित्येकेषाम् ॥ ६ ॥ अग्रेण ध्रुवामनवक्लिश्नन् प्रस्तरमत्याक्रामति—अग्नाविष्णू मा वामव क्रमिषम् [l. c. *e*] इति ॥ ७ ॥ दक्षिणतो ऽवतिष्ठते—विष्णो स्थानमसि [l. c. *h*] इति ॥ ८ ॥ अन्तर्वेदि दक्षिणः पादो भवति। अवघ्र इवे सव्यः ॥ ९ ॥ दक्षिणं परिधिसंधिमन्ववहृत्योर्ध्वस्तिष्ठन्नन्वारब्धे यजमाने प्राञ्चमुदञ्चँ संततमृजुमाघारमाघारयति—समारभ्योर्ध्वो ऽध्वरः [l. c. *k*] इति ॥ १० ॥ न्यञ्चमाघारयेद् वृष्टिकामस्योर्ध्वँ स्वर्गकामस्य ॥ ११ ॥ एतं भूयिष्ठमाहुतीनां जुहोति ॥ १२ ॥ हुत्वा हुं प्राणिति ॥ १३ ॥ हिं बृहद्भाः [l. c. *n*] इति स्रुचमुद्गृह्णाति ॥ १४ ॥ असँस्पर्शयन् स्रुचौ प्रत्याक्रामति—॥ १५ ॥ ॥ १३ ॥

1 DGc त्यंतः

2 D संसि°

3 D अवघ्रः (omitting इव), Ga अविस्रुवस्

4–4 Gbc हुत्वानु–; others as above.

5 Thus all the mss. हिं not in TaitS.

पाहि माग्ने दुश्चरिताद् आ मा सुचरिते भज [1. 1. 12o] इति ॥ १ ॥ एते एवाक्रमणप्रत्याक्रमणे मन्त्रवती भवतः ॥ २ ॥ तत्रैषो ऽत्यन्तप्रदेशो या उत्तरतः सप्ताहुतीर्जुहोत्युत्तरं परिधिसंधिमन्ववहृत्य ता जुहोति । या दक्षिणतो दक्षिणं परिधिसंधिमन्ववहृत्य ताः ॥ ३ ॥ दक्षिणेनैव दक्षिणाक्रामति[1] सव्येनोदङ् । अपि वा सव्येन दक्षिणा दक्षिणेनोदङ् ॥ ४ ॥ प्रत्याक्रम्य जुह्वा ध्रुवाँ समनक्ति—मखस्य शिरो ऽसि सं ज्योतिषा ज्योतिरङ्क्ताम् [1. c. p] इति[2] ॥ ५ ॥ उन्नीतँ रायः इति स्रुवेण ध्रुवाया आज्यमादाय सुवीराय स्वाहा इति जुहूं प्रत्यभिघारयति ॥ ६ ॥ यज्ञेन यज्ञः संततः इति जुह्वा ध्रुवाम् ॥ ७ ॥ निधाय स्रुचौ वेदेरन्त्यन्तं[3] तृणमादायोत्तरत उत्करे प्राञ्चौ प्रवराया तिष्ठेते—

क इदमध्वर्युर्भविष्यति स इदमध्वर्युर्भविष्यति ।
यज्ञो यज्ञस्य विष्णो स्थाने तिष्ठामि ।
वागार्त्विज्यं करोतु मन आर्त्विज्यं करोतु ।
वाचं प्रपद्ये । भूर्भुवः सुवः ॥

इति पूर्वो ऽध्वर्युः ।

क इदमग्नीद् भविष्यति स इदमग्नीद् भविष्यति ।
यज्ञो यज्ञस्य विष्णो स्थाने तिष्ठामि ।
वागार्त्विज्यं करोतु मन आर्त्विज्यं करोतु ।
वाचं प्रपद्ये । भूर्भुवः सुवः ॥

इति ॥ ८ ॥ ॥ १४ ॥

अपर आग्नीध्रः ॥ १ ॥ स्फ्यं चेध्मसंनहनानि चान्वारभेते ॥ २ ॥ ब्रह्माणमामन्त्रयते—ब्रह्मन् प्रवरायाश्रावयिष्यामि इति ॥ ३ ॥ [4]ततो ब्रह्मणा प्रसूतो[4] ऽध्वर्युरा[5]श्रावयति—आ श्रावय [1. 6. 11. 1] इति ओ श्रावय इति वा ॥ ४ ॥ अस्तु श्रौषट् [1. c.] इत्याग्नीध्रः प्रत्याश्रावयति ॥ ५ ॥ तत्रैषो ऽत्यन्तप्रदेशो यत्र कचाध्वर्युराश्रावयेन्नित्यमेवाग्नीध्रो ऽपरेणोत्करं दक्षिणामुखस्तिष्ठन् स्फ्यँ सेध्मसंनहनमूर्ध्वं धारयमाणः प्रत्याश्रावयति ॥ ६ ॥ आग्नीध्रागारे तु सोमे ॥ ७ ॥ आश्राव्य प्रवरं प्रवृणीते—अग्निर्देवो होता देवान् यक्षद् विद्वाँश्चिकित्वान् मनुष्वद्भरतवद्-

1 D दक्षिणां क्रा°, Gbc दक्षिणात्याक्रा°
2 Gbc add त्रिः
3 D °रभ्यंतं, Gac °रभ्यन्तरं, Gb °रप्यन्तः
4-4 Ga प्रसृतो ब्रह्मणा, Gb प्रसूतो
5 Ga om. अध्वर्युः; Gb ब्रह्म

दोवद्दोवत्[1] इति यथार्षेयो यजमानः ॥ ८ ॥ त्रीनार्षेयान्[2] मन्त्रकृत इत ऊर्ध्वान् वृणीते ॥ ९ ॥ अपि वा मनुवद् इत्येव प्रवृणीते ॥ १० ॥ पुरोहितस्यार्षेयान् राज्ञः प्रवृणीते ॥ ११ ॥ ब्रह्मण्वदा च वक्षद् ब्राह्मणा अस्य यज्ञस्य प्रावितारः इत्युक्त्वा असौ इति होतुरुपाँशु नाम गृह्णाति ॥ १२ ॥ मानुषः इत्युच्चैः ॥ १३ ॥ वेद्यां तृणमपिसृज्य ॥ १४ ॥ ॥ १५ ॥

अनपव्या[3]रन्तः प्रचरन्तीति विज्ञायते ॥ १ ॥ यत्राभिजानाति घृतवतीमध्वर्यो स्रुचमास्यस्व [2. 5. 9. 6] इति तज्जुहूपभृतावादायात्याक्रम्याश्राव्याह—समिधो यज इति ॥ २ ॥ वषट्कृते जुहोति ॥ ३ ॥ आश्राव्याश्राव्य यजयज इत्येवोत्तरेभ्यः संप्रेष्यति ॥ ४ ॥ अपरेणाघारसंभेदं प्राचः प्रयाजानभिक्रामन्[4] जुहोति ॥ ५ ॥ समानत्र वा ॥ ६ ॥ अपि वा समिधः पुरस्ताद् यजति तनूनपातं दक्षिणत इडः पश्चाद् बर्हिरुत्तरतः स्वाहाकारं मध्ये ॥ ७ ॥ यत्र समिधस्तत्र[5] सर्वा आहुतीर्जुहुयात् ॥ ८ ॥ चतुर्थँ होष्यन्नौपभृतादर्धं जुह्वामानयते ॥ ९ ॥ पञ्च प्रयाजानिष्ट्वा प्रत्याक्रम्य यज्जुह्वामाज्यं परिशिष्टं तेन हवीँष्यभिघारयति—ध्रुवामग्रे ऽथाग्नेयं पुरोडाशमथोत्तरमथ शृतमथ दध्युपभृतमन्ततः ॥ १० ॥ अथायतने स्रुचौ सादयित्वा पुनरादत्ते ॥ ११ ॥ एवमादत्ते भवत आ स्विष्टकृतः ॥ १२ ॥ आँज्यभागाभ्यां प्रचरति ॥ १३ ॥ अग्नये ऽनुब्रूहि इति संप्रेष्यति ॥ १४ ॥ जुह्वां[6] चतुर्गृहीतमाज्यं गृहीत्वा पञ्चगृहीतं वात्याक्रम्य[7] श्राव्याह—अग्निं यज इति ॥ १५ ॥ वषट्कृत उत्तरार्धपूर्वार्धे[8] जुहोति ॥ १६ ॥ नैतामुत्तरेणान्यामाहुतिं जुहोति प्रत्याक्रम्य ॥ १७ ॥ ॥ १६ ॥

सोमायानुब्रूहि इति संप्रेष्यति[9] ॥ १ ॥ यथागृहीतमाज्यं गृहीत्वात्याक्रम्याश्राव्याह—सोमं यज इति ॥ २ ॥ वषट्कृते दक्षिणार्धपूर्वार्धे प्रबाहुक् पूर्वया जुहोति ॥ ३ ॥ नैतां दक्षिणेनान्यामाहुतिं जुहोति प्रत्याक्रम्य ॥ ४ ॥ तत्रैषो ऽत्यन्तप्रदेशः स्रुवेणैवाज्यदोहयोरित्[10]यवद्यति हस्तेन पुरोडाशस्य ॥ ५ ॥ जमदग्नीनामेव पञ्चावत्तं चतुरवत्तमितरेषाम् ॥ ६ ॥ अप्यजामदग्न्यो जामदग्न्यमामन्त्र्य पञ्चावत्तं कुर्वीत ॥ ७ ॥ ततः संप्रेष्यति—अग्नये ऽनुब्रूहि इति ॥ ८ ॥ जुह्वामु-

1 D °भरतवद्दावत्, Ga °भरतवद्देवाद्देवत्, Gb °भरतवद्दोवद्तोवत्
2 DGa om. त्रीन्
3 Gb मधुम°
4 Gb प्रयाजाननभि च क्रा°
5 Gb सामद्धतमस्तत्र
6 Gb जुह्वां समा°
7 Gbc तत आ°
8-8 D उत्तरार्धे
9 DGa om.
10 Gb om. इति

पस्तीर्याग्नेय च पुरोडाशस्याङ्गुष्ठेन माँससँहिताभ्यामङ्गुलीभ्यां मध्यादवदाय पूर्वार्धादवद्यति पश्चार्धात् तृतीयं यदि पञ्चावदानः—मा भेर्मा संविक्था मा त्वा हिँसिषं मा ते तेजो ऽपक्रमीत् । भरतमुद्धरेमनुषिञ्च । अवदानानि ते प्रत्यवदास्यामि । नमस्ते अस्तु मा मा हिँसीः [TB 3. 7. 5. 5] इति ॥ ९ ॥ अङ्गुष्ठपर्वमात्राण्यवदानान्यसंभिन्दन्नवद्यति ॥ १० ॥ अवदानान्यभिघार्य हविः प्रत्यभिघारयति—

यदवदानानि ते ऽवद्यन् विलोमाकार्षमात्मनः ।

आज्येन प्रत्यनज्म्येनत् तत् त आप्यायतां पुनः ॥ [l. c. 5,6]

इति ॥ ११ ॥ आक्रम्याश्राव्याह—अग्निं यज इति ॥ १२ ॥ वषट्कृते मध्ये जुहोति ॥ १३ ॥ अपिदधदिवाप्रतिगृह्णन्नाज्यँ हुत्वा पुरोडाशं जुहोति तत आज्यम् ॥ १४ ॥ ॥ १७ ॥

पूर्वांपूर्वाँ सँहितामाहुतिं जुहोत्या स्विष्टकृतः ॥ १ ॥ अपि वा स्रुच्यमाघारमभिजुहुयात् ॥ २ ॥ तत उपाँशुयाजाय संप्रेष्यति—विष्णवे इत्युपाँशु अनुब्रूहि इत्युच्चैः ॥ ३ ॥ यथागृहीतमाज्यं गृहीत्वात्याक्रम्याश्राव्याह[2]—विष्णुम् इत्युपाँशु यज इत्युच्चैः ॥ ४ ॥ वषट्कृते जुहोति ॥ ५ ॥ अग्नीषोमीयमेक उपाँशुयाजँ समामनन्ति प्राजापत्यमेके ॥ ६ ॥ स एष पौर्णमास्यामेव भवति ॥ ७ ॥ यथाग्नेयेनैवमुत्तमेन पुरोडाशेन प्रचरति—अग्नीषोमाभ्याम् इति पौर्णमास्यां इन्द्राग्निभ्याम् इत्यमावास्यायाम् ॥ ८ ॥ इत्यसंनयतः ॥ ९ ॥ अथ यदि संनयेत् इन्द्रायानुब्रूहि इति संप्रेष्यति[3] ॥ १० ॥ महेन्द्राय इति वा यदि[3] महेन्द्रयाजी भवति ॥ ११ ॥ जुह्वामुपस्तीर्य द्विः शृतस्यावद्यति द्विर्दध्नश्चतुरवदानस्य त्रिः[4] पञ्चावदानस्य ॥ १२ ॥ अभिघार्यात्याक्रम्याश्राव्याह—इन्द्रं यज इति ॥ १३ ॥ महेन्द्रम् इति वा ॥ १४ ॥ वषट्कृते जुहोति ॥ १५ ॥ प्रत्याक्रम्य स्रुवेण पार्वणौ होमौ जुहोति—

ऋषभं वाजिनं वयं पूर्णमासं यजामहे ।

स नो दोहताँ सुवीर्यँ रायस्पोषँ सहस्रिणम् ।

प्राणाय सुराधसे पूर्णमासाय स्वाहा ॥ [l. c. 13]

इति पौर्णमास्याम् ।

अमावास्या सुभगा सुशेवा धेनुरिव भूय आप्यायमाना ।

सा नो दोहताँ सुवीर्यँ रायस्पोषँ सहस्रिणम् ।

अपानाय सुराधसे ऽमावास्यायै स्वाहा ॥ [l. c.]

1 Da ऊर्ध्वलोमा°, Gab कारिषमा°

2 Ga गृहीत्वाक्र°

3 Gb om.

4 Gb त्रिस्त्रिः

इत्यमावास्यायाः[1] ॥ १६ ॥ ॥ १८ ॥

अथ नारिष्ठान् होमान् जुहोति—

दश ते तनुवो यज्ञ यज्ञियास्ताः प्रीणातु यजमानो घृतेन ।
नारिष्ठयोः प्रशिषमीडमानो देवानां दैव्ये ऽपि यजमानो ऽमृतो ऽभूत् ॥ स्वाहा ॥
यं वां देवा अकल्पयन्नूर्जो भागँ शतक्रतू ।
एतद्वां तेन प्रीणानि तेन तृप्यतमँहहौ ॥ स्वाहा ॥
अहं देवानाँ सुकृतामस्मि लोके ममेदमिष्टं न मिथुर्भवाति ।
अहं नारिष्ठावनुयजामि विद्वान् यदाभ्यामिन्द्रो अदधाद् भागधेयम् ॥ स्वाहा ॥
अदारसृद् भवत देव सोमास्मिन् यज्ञे मरुतो मृडता नः ।
मा नो विददभिभा मो अशस्तिर्मा नो विदद् वृजना द्वेष्या या ॥ स्वाहा ॥

[TB 3.7.5. 11-13] इति ॥ १ ॥ ततः संप्रेष्यति—अग्नये स्विष्टकृते ऽनुब्रूहि इति ॥ २ ॥ जुह्वामुपस्तीर्य सर्वेषाँ हविषामुत्तरार्धात् सकृत्सकृदवदानस्य द्विः पञ्चावदानस्य ॥ ३ ॥ स्थवीयाँस्येतानि दैवतेभ्यो भवन्ति ॥ ४ ॥ द्विरभिघार्य न हविः प्रत्यभिघारयति ॥ ५ ॥ अत्याक्रम्याश्राव्याह—अग्निँ स्विष्टकृतं यज इति ॥ ६ ॥ वषट्कृत उत्तरार्धपूर्वार्धे ऽतिहाय पूर्वा आहुतीर्जुहोति ॥ ७ ॥ प्रत्याक्रम्यायतने स्रुचौ सादयति ॥ ८ ॥ अत्रैके प्राशित्रँ समामनन्ति । उपरिष्टादेके[2] ॥ ९ ॥ ॥ १९ ॥

[3]इति दर्शपूर्णमासे द्वितीयः प्रश्नः[3] ॥

---

1 Gb adds अवद्यति

2 Gc repeats उपरिष्टादेके

3-3 D इति द्वितीयः, Ga ॥२॥, Gc द्वितीयः प्रश्नः समाप्तः

इडापात्रमुपस्तीर्याग्नेयस्य पुरोडाशस्य दक्षिणार्धात् पूर्वमिडावदानमवद्यति—

मनुना दृष्टां घृतपदीं मित्रावरुणसमीरिताम् ।
दक्षिणार्धादसंभिन्दन्नवद्याम्येकतोमुखाम् ॥ [TB 3. 7. 5. 6]

इति ॥ १ ॥ पृष्ठँ संभिद्य पूर्वार्धाद् यजमानभागमवद्यत्यणुमिव दीर्घम् ॥ २ ॥ संभेदाद् द्वितीयमिडावदानमवद्यति ॥ ३ ॥ एवँ सर्वेषाँ हविषामिडाँ समवद्यति ॥ ४ ॥ स्थवीयाँस्येतानि सौविष्टकृतेभ्यो भवन्ति ॥ ५ ॥ अभिघार्यान्तरा हवीँषि स्रुचश्च हृत्वा होत्र इडामादधाति ॥ ६ ॥ स्वयं वा होतेडामादत्ते ॥ ७ ॥ अग्रेण होतारमध्वर्युर्दक्षिणातिक्रामति ॥ ८ ॥ अनुत्सृजन्निव होतेडयाध्वर्युं परिगृह्णाति ॥ ९ ॥ पश्चात् प्राङुपविश्य स्रुवेण होतुरङ्गुलिपर्वणी अनक्ति ॥ १० ॥ पूर्वमक्त्वापरमनक्ति ॥ ११ ॥ यथेतं प्रतिपरेत्य पुरस्तात् प्रत्यङ्ङासीन इडाया इडामादधाति ॥ १२ ॥ हस्त्याँ होत्रे सकृदुपस्तृणाति द्विरादधाति सकृदभिघारयति ॥ १३ ॥ स्वयं वा होतोत्तरमिडावदानमादत्ते ॥ १४ ॥ लेपादुपस्तृणाति ॥ १५ ॥ लेपादभिघारयति ॥ १६ ॥ उपहूयमानामिडामन्वारभेते अध्वर्युर्यजमानश्च ॥ १७ ॥ यत्राभिजानाति दैव्या अध्वर्यव उपहूता उपहूता मनुष्याः [2. 6. 7. 4] इति ॥ १८ ॥ ॥ १ ॥

तदध्वर्युरेतं मन्त्रं जपति—उपहूतः पशुमानसानि [TB 3. 3. 8. 4] इति ॥ १ ॥ यत्राभिजानाति उपहूतो ऽयं यजमानः [2. 6. 7. 5] इति तद् यजमान एतमेव मन्त्रं जपति ॥ २ ॥ उपहूतायामिडायामवान्तरेडाँ होता प्राश्नाति—वाचस्पतये त्वा हुतं प्राश्नामि सदसस्पतये त्वा हुतं प्राश्नामि [2. 6. 8. 1] इति ॥ ३ ॥ उपहूतामिडां यजमानपञ्चमा ऋत्विजः प्राश्नन्ति—

1 Gbc °पात्र उ°
2 D °र्दक्षिणाक्र°
3 Da °डाया अ°, Db °डायां अ°, Ga °डाया°
4 D परिमगृ°, Ga परिप्रगृ°, Gb परिप्रतिगृ°
5 D °स्रु°
6 D °र्युवः

इडे भागं जुषस्व नो जिन्व गा जिन्वार्वतः ।

तस्यास्ते भक्षिवाणः स्याम सर्वात्मानः सर्वगणाः ॥ [TB 3. 7. 5. 7]

इति ॥ ४ ॥ **प्राश्य तूष्णीमासीता मार्जनात् ॥ ५ ॥ अन्तर्वेदि पवित्रवति मार्जयन्ते**—मनो ज्योतिर्जुषताम् [1. 5. 3*g*] **इति ॥ ६ ॥ आग्नेयं पुरोडाशं प्राञ्चं विरुज्य प्राशित्रहरणमादाय प्राशित्रमवद्यति**—

अज्यायो यवमात्रादाव्याधात् कृत्यतामिदम् ।

मा रूरुपाम यज्ञस्य शुद्धँ स्विष्टमिदँ हविः ॥ [TB 3. 7. 5. 6]

इति ॥ ७ ॥ [illegible] ॥ ८ ॥ **अविरुज्याङ्गुष्ठेनोपमध्यमया चाङ्गुल्या यवमात्रं पिप्पलमात्रं वादाय ॥ ९ ॥** ॥ २ ॥

**आग्नेयं पुरोडाशं बर्हिषदं कृत्वा यजमानो ऽभिमृशति । तद् याजमाने व्याख्यास्यामः ॥ १ ॥ अथैनं चतुर्धा कृत्वा व्यादिशेत्**[1]—इदं ब्रह्मण इदँ होतुरिदमध्वर्योरिदमग्नीधः [TB 3. 3. 8. 8] **इति ॥ २ ॥** इदं यजमानस्य **इत्यध्वर्युर्यजमानभागम् ॥ ३ ॥ स्थवीयाँस्येतानीडावदानेभ्यो भवन्ति ॥ ४ ॥ व्यादिश्याग्नीधे ऽग्रे**[2] **षडवत्तमादधाति ॥ ५ ॥ उपस्तीर्यावदा**[3]**याभिघार्य पुनरेवोपस्तीर्यावदायाभिघारयति**[4] **। षडवत्तँ संपादयति ॥ ६ ॥ प्राश्नात्याग्नीध्रः**—

उपहूतो द्यौः पितोप मां द्यौः पिता ह्वयताम् ।

अग्निराग्नीध्रादायुषे वर्चसे जीवात्वै पुण्याय ॥ [TB 3. 7. 6. 15]

इति ॥ ७ ॥ **वेदेन ब्रह्मयजमानभागौ परिहरति**[5] **॥ ८ ॥ अन्येन होत्रे ऽन्येनाध्वर्यवे ॥ ९ ॥** पृथिव्यै भागो ऽसि **इति होता प्राश्नाति** अन्तरिक्षस्य भागो ऽसि **इत्यध्वर्युः** दिवो भागो ऽसि **इति सँस्थिते ब्रह्मा ॥ १० ॥ अन्वाहार्यपचने महान्तमोदनं पक्त्वाभिघार्यानभिघार्य वोद्वास्यान्तर्वेद्यन्वाहार्यमासन्नं यजमानो ऽभिमृशति । तद् याजमाने व्याख्यास्यामः ॥ ११ ॥** ॥ ३ ॥

दक्षिणस्य उपहर्तवै **इति संप्रेष्यति ॥ १ ॥ य ऋत्विजामुत्तरतः स्युस्तान् ब्रूयात्**—दक्षिणत एत **इति ॥ २ ॥ तेभ्यो दक्षिणत आसीनेभ्यो ऽन्वाहार्यं**[6] **ददाति**—ब्राह्मणा अयं व ओदनः **इति ॥ ३ ॥** उत्तरतः परीत **इति पुनराह ॥ ४ ॥ हविःशेषानुद्वास्योल्मुके अपिसृज्य संप्रेष्यति**—ब्रह्मन् प्रस्थास्यामः ॥ समिधमाधायाग्नीत् परिधीँश्चाग्निं

1 Gbc °दिशाति

2 D om. ऽग्रे

3 G आधा° for अवदा°

4 Gb °स्तीर्याभिघा°, Gc °स्तीर्याधा°; Ga om. अवदायाभि

5 D न ब्रह्मयजमानभागौ परिप्रा°

6 Gb adds दक्षिणां

च सकृत्सकृत् संमृड्ढि इति ॥ ५ ॥ प्रसूतो ब्रह्मणाग्नीध्रो ऽनूयाजसमिधमादधाति—

एषा ते ऽग्ने समित् तया वर्धस्व चाप्यायस्व ।
वर्धतां च ते यज्ञपतिरा च प्यायतांम्[1] स्वाहा ॥

इति ॥ ६ ॥ अस्पर्शयन्निध्मसंनहनैराग्नीध्रः परिधींश्चाग्निं च सकृत्सकृत्[2] संमार्ष्टि । तूष्णीं परिधीन् ॥ ७ ॥ अग्ने वाजजिद् वाजं त्वा ससृवांसं वाजं जिगिवांसं वाजिनं वाजजितं वाजजित्यायै संमार्ज्म्यग्निमन्नादमन्नाद्याय [TB 3. 7. 6. 17,18] इत्यग्निं संमार्ष्टि ॥ ८ ॥ अथैतानि संमार्जनान्यद्भिः संस्पृश्याहवनीये प्रहरति—

यो भूतानामधिपती रुद्रस्तन्तिचरो वृषा[3] ।
पशूनस्माकं मा हिंसीरेतदस्तु हुतं तव ॥ स्वाहा ॥ [TB 3. 3. 2. 5]

इति ॥ ९ ॥ उत्कर उदस्यतीत्येकेषाम् ॥ १० ॥ ॥ ४ ॥

जुहूपभृतावादायौपभृतं जुह्वां समानीयात्याक्रम्याश्राव्याह—देवान् यज इति ॥ १ ॥ वषट्कृते जुहोति ॥ २ ॥ आश्राव्याश्राव्य यजयज इत्येवोत्तराभ्यां संप्रेष्यति ॥ ३ ॥ अग्रेणाघारसंभेदं प्रतीचो ऽनूयाजान् यजति ॥ ४ ॥ प्राञ्चमुत्तममनुसंस्थापयति ॥ ५ ॥ उत्तमेनेतरावनुसंभिनत्ति ॥ ६ ॥ प्रत्याक्रम्यायतने स्रुचौ सादयित्वा वाजवतीभ्यां व्यूहति ॥ ७ ॥ वाजस्य मा प्रसवेन [1. 1. 13$a$] इति दक्षिणेनोत्तानेन सप्रस्तरां जुहूमुद्गृह्णाति । अथा सपत्नाँ इन्द्रो मे निग्राभेणाधरां अकः इति सव्येन नीचोपभृतं नियच्छति ॥ ८ ॥ उद्ग्राभं च [l. c. $b$] इति जुहूमुद्गृह्णाति । निग्राभं च [l. c.] इत्युपभृतं नियच्छति ॥ ९ ॥ ब्रह्म देवा अवीवृधन् [l. c.] इति प्राचीं जुहूं प्रोहति ॥ १० ॥

अथा सपत्नानिन्द्राग्नी मे विषूचीनान् व्यस्यताम् [l. c.]

इति प्रतीचीमुपभृतं बहिर्वेदि निरस्यति ॥ ११ ॥ अद्भिरभ्युक्ष्योपभृतमभ्युदाहृत्य जुह्वा संस्रावेण परिधीननक्ति—वसुभ्यस्त्वा [l. c. $c$] इति मध्यमं रुद्रेभ्यस्त्वा [l. c.] इति दक्षिणं आदित्येभ्यस्त्वा [l. c.] इत्युत्तरम् ॥ १२ ॥ न प्रस्तरे जुहूं सादयति ॥ १३ ॥ विधृतीभ्यां प्रस्तरं समुत्क्षिप्य बर्हिषि विधृती अपिसृज्य स्रुक्षु प्रस्तरमनक्ति—अक्तं रिहाणाः [l c. $d$] इति जुह्वामग्रं वियन्तु वयः [l. c.] इत्युपभृति मध्यं[4] प्रजां योनिं मा निर्मृक्षम्[5] [l. c. $e$] इति ध्रुवायां मूलम् ॥ १४ ॥ एवमेव द्वितीयमनक्ति । एवं तृतीयम् ॥ १५ ॥ आयुषे त्वा इत्यक्तस्य तृणमपयत्य[6]

1 Gb adds वर्धिषीमहि च वयमा मा च प्यासिषीमहि
2 D सकृत् only once.
3 D वृपा
4 Gb मध्ययं
5 Gb adds आप्यायन्तामोषधयः
6 Gb °यम्य

जुह्वां प्रस्तरं प्रतिष्ठाप्याश्राव्यासीनः संप्रेष्यति—इषिता दैव्या होतारो भद्रवाच्याय प्रेषितो मानुषः सूक्तवाकाय सूक्ता ब्रूहि [TB 3. 3. 8. 11] इति ॥ १६ ॥ अनूच्यमाने सूक्तवाके ॥ १७ ॥ ॥ ५ ॥

सह शाखया प्रस्तरमुपरीव प्राञ्चमाहवनीये प्रहरति—रोहितेन त्वाग्निर्देवतां गमयतु [1. 6. 4p] इत्येतैर्मन्त्रैः । मरुतां पृषतय स्थ दिवं गच्छ ततो नो वृष्टिमेरय[1] [1. 1. 13gh] इति च ॥ १ ॥ न प्रतिशृणाति नात्यग्रं प्रहरेत् ॥ २ ॥ न पुरस्तात् प्रत्यस्येत् ॥ ३ ॥ जिह्मामिव हस्तं कृत्वा न्यञ्चमन्ततो नियच्छति ॥ ४ ॥ यत्राभिजानाति आशास्ते ऽयं यजमानो ऽसौ [2. 6. 9. 7] इति तत् प्रस्तरमपिसृज्याह अग्नीद् गमय इति ॥ ५ ॥ त्रिरञ्जलिनाग्नीध्रः प्रस्तरमूर्ध्वमुद्यौति ॥ ६ ॥ न विश्वञ्चं वियुयात्[2] ॥ ७ ॥ ततो ऽध्वर्युमाह—अनुप्रहर संवदस्व इति ॥ ८ ॥ पुरस्तादपात्तं तृणमध्वर्युरनुप्रहरति—स्वगा तनुभ्यः इति ॥ ९ ॥ एतदेतत् इति त्रिरङ्गुल्यान्ववदिशति ॥ १० ॥ अहीनः प्राणः इति प्राणायतनानि संमृशति ॥ ११ ॥ आयुष्पा अग्ने ऽस्यायुर्मे पाहि [1. 1. 13i] इति मुखं विमृष्टे ॥ १२ ॥ ध्रुवासि [l. c. l] इतीमामभिमृश्य[3] अगानग्नीत् [2. 6. 5. 6] इति [अध्वर्युर्] औह । अगन् [l. c.] इत्याग्नीध्रः । श्रावय इत्यध्वर्युः । श्रौषट् इत्याग्नीध्रः ॥ १३ ॥ मध्यमं परिधिमन्वारभ्य संप्रेष्यति—स्वगा दैव्या होतृभ्यः स्वस्तिर्मानुषेभ्यः शंयोर्ब्रूहि [TB 3. 3. 8. 11] इति ॥ १४ ॥ अनूच्यमाने शंयुवाके परिधीन् प्रहरति—यं परिधिं पर्यधत्थाः [1. 1. 13m] इति मध्यमं यज्ञस्य पाथ उप समितम् [l. c. n] इतीतरौ ॥ १५ ॥ अवाञ्चमुत्तरार्ध्यमङ्गारेषूपोहति ॥ १६ ॥ जुह्वामुपभृतो मुखमवधाय सँस्रावेण परिधीनभिजुहोति—सँस्रावभागा स्थेषा बृहन्तः [l. c. o] इति ॥ १७ ॥ अत्रर्त्विजो हविःशेषान् भक्षयन्ति ॥ १८ ॥ ॥ ६ ॥

सस्रुवे जुहूपभृतावध्वर्युरादत्ते वेदँ होता स्फ्यं चाज्यस्थालीमुदकमण्डलुं चाग्नीध्रः ॥ १ ॥ पत्नीः सं[या]जयिष्यन्तः प्रत्यञ्चः प्रतिपरियन्ति ॥ २ ॥ दक्षिणेन गार्हपत्यमध्वर्युः प्रतिपद्यत उत्तरेणेतरौ ॥ ३ ॥ कस्तम्भ्याँ स्रुचौ सादयति—अग्नेर्वामपन्नगृहस्य सदसि सादयामि [l. c. p] इति ॥ ४ ॥ धुरोः प्रोहति—धुरि धुर्यौ पातम् [l. c. r] इति ॥ ५ ॥ यदि पात्र्या निर्वपेत् स्फ्ये विमुञ्चेत् ॥ ६ ॥ अपरेण गार्हपत्यमूर्ध्वज्ञव आसीना ध्वानेनोपाँशु वा पत्नीः संयाजयन्ति ॥ ७ ॥ वेदमुपभृतं कृत्वा सोमायानुब्रूहि इति संप्रेष्यति ॥ ८ ॥ यथा-

1 Ga वृष्टिमावह
2 Gab विधु°
3 Ga °मृश्याथा Gc °मृश्याणा
4 DGb om.

गृहीतमाज्यं गृहीत्वाश्राव्याह—सोमं यज इति ॥ ६ ॥ वषट्कृते दक्षिणार्धे जुहोति ॥ १० ॥ यथागृहीतेनैव पत्नीः संयाजयन्ति ॥ ११ ॥ त्वष्ट्रे ऽनुब्रूहि इति संप्रेष्यति ॥ १२ ॥ आश्राव्याह—त्वष्टारं यज इति ॥ १३ ॥ वषट्कृत उत्तरार्धे जुहोति ॥ १४ ॥ उत्तरतः सोमं यजति दक्षिणतस्त्वष्टारमित्येकेषाम् ॥ १५ ॥ अत्र राकां पुत्रकामो यजेत सिनीवालीं पशुकामः कुहूं पुष्टिकामः ॥ १६ ॥ राकाया अनुब्रूहि इति संप्रेष्यति ॥ १७ ॥ आश्राव्याह—राकां यज इति ॥ १८ ॥ वषट्कृते जुहोति ॥ १९ ॥ सिनीवाल्या अनुब्रूहि इति संप्रेष्यति ॥ २० ॥ आश्राव्याह—सिनीवालीं यज इति ॥ २१ ॥ वषट्कृते जुहोति ॥ २२ ॥ ॥ ७ ॥

कुह्वा अनुब्रूहि इति संप्रेष्यति ॥ १ ॥ आश्राव्याह—कुहूं यज इति ॥ २ ॥ वषट्कृते जुहोति ॥ ३ ॥ परिश्रिते देवानां पत्नीर्यजति । अपरिश्रिते वा ॥ ४ ॥ देवानां पत्नीभ्यो ऽनुब्रूहि इति संप्रेष्यति ॥ ५ ॥ आश्राव्याह—देवानां पत्नीर्यज इति ॥ ६ ॥ वषट्कृते जुहोति ॥ ७ ॥ अग्नये गृहपतये ऽनुब्रूहि इति संप्रेष्यति ॥ ८ ॥ आश्राव्याह—अग्निं गृहपतिं यज इति ॥ ६ ॥ वषट्कृते जुहोति ॥ १० ॥ पत्नीमन्वारम्भयित्वा स्रुवेण गार्हपत्ये जुहोति—

सं पत्नी पत्या सुकृतेन गच्छतां यज्ञस्य युक्तौ धुर्यावभूताम् ।

संजानानौ विजहतामरातीर्दिवि ज्योतिरजरमारभेताम् ॥ स्वाहा ॥ [TB3.7.5.11]

इति ॥ ११ ॥ स्रुवेण होतुरङ्गुलिपर्वणी अनक्ति ॥ १२ ॥ अपरमङ्क्त्वा पूर्वमनक्ति ॥ १३ ॥ चतुर आज्यबिन्दून् होत्र इडामवद्यति[1] षडग्नींधे ॥ १४ ॥ उपह्वयमानामिडामन्वारभेते अध्वर्युः पत्नी च ॥ १५ ॥ उपहूतामिडां प्राश्नाति होता प्राश्नात्याग्नीध्रः—

उपहूता पृथिवी मातोप मां माता पृथिवी ह्वयताम् ॥

अग्निराग्नीध्रादायुषे वर्चसे जीवात्वै पुण्याय ॥ [TB 3. 7. 6. 15]

इति ॥ १६ ॥ प्राश्य मार्जयेते ॥ १७ ॥ इडान्तं भवति ॥ १८ ॥ ॥ ८ ॥

शंयुवन्तं वा ॥ १ ॥ यदि शंयुवन्तं कुर्याद् वेदात् तृणमपादाय जुह्वामग्रमञ्ज्यात् स्रुवे मध्यमाज्यस्थाल्यां मूलम् ॥ २ ॥ तस्य स एव कल्पो यः प्रस्तरस्य ॥ ३ ॥ इध्मप्रव्रश्चनान्यन्वाहार्यपचने ऽभ्याधाय पिष्टलेपफलीकरणहोमौ जुहोति ॥ ४ ॥ चतुर्गृहीत आज्ये फलीकरणानोप्य जुहोति—अग्ने ऽदब्धायो ऽशीततनो [1. 1. 13 s] इति प्रतिपद्य स्वाहाकारान्तेन ॥ ५ ॥ आज्येनैव पिष्टलेपं जुहोति—

1 Ga इडामाद्रायाति, Gbc इडामादधाति

उलूखले मुसले यच्च शूर्पे आशिश्लेष दृषदि यत् कपाले ।

अवप्रुषो विप्रुषः संयजामि विश्वे देवा हविरिदं जुषन्ताम् ।

यज्ञे या विप्रुषः सन्ति बह्वीरग्नौ ताः सर्वाः स्विष्टाः सुहुता जुहोमि ॥ स्वाहा ॥

[TB 3. 7. 6. 21] इति ॥ ६ ॥ **वेदँ होता पत्न्या उपस्थे त्रिरस्यति—** वेदो ऽसि ॥ वित्तिरसि ॥ विदेय [1. 6. 4 *v*] **इत्येतैर्मन्त्रैः** ॥ ७ ॥ **अस्तमस्तं पत्नी प्रतिनिरस्यति—** निर्द्विषन्तं निरराति नुद **इति** ॥ ८ ॥ **स्वयं वा पत्न्यास्यते** ॥ ९ ॥ **पुमाँसँ ह जानुका भवतीति विज्ञायते** ॥ १० ॥ **अत्रैके पत्न्या विमोचनँ समामनन्ति** ॥ ११ ॥ **वेदँ होताहवनीयात् स्तृणन्नेति—** घृतवन्तं कुलायिनम् [l. c. *y*] **इत्यनुवाकशेषेण** ॥ १२ ॥ **अत्रैके पार्वणौ होमौ समामनन्ति** ॥ १३ ॥ **स्रुवेण सर्वप्रायश्चित्तानि जुहोतीति विज्ञायते** ॥ १४ ॥ ॥ ९ ॥

**प्रत्याहुती[1] गृहीत्वा वा[2]** ॥ १ ॥

ब्रह्म प्रतिष्ठा मनसो ब्रह्म वाचो ब्रह्म यज्ञानाँ हविषामाज्यस्य ।

अतिरिक्तं कर्मणो यच्च हीनं यज्ञः पर्वाणि प्रतिरन्नेति कल्पयन् ।

स्वाहाकृताहुतिरेतु देवान् ॥ स्वाहा ॥

आश्रावितमत्याश्रावितं वषट्कृतमत्यनूक्तं च यज्ञे ।

अतिरिक्तं कर्मणो यच्च हीनं यज्ञः पर्वाणि प्रतिरन्नेति कल्पयन् ।

स्वाहाकृताहुतिरेतु देवान् ॥ स्वाहा ॥

यद् वो देवा अतिपादयानि वाचाचित् प्रयतं देवहेडनम् ।

अरायो अस्माँ अभिदुच्छुनायते ऽन्यत्रास्मन्मरुतस्तन्निधेतन ॥ स्वाहा ॥

ततं म आऽपस्तदु तायते पुनः स्वादिष्ठा धीतिरुचथाय शस्यते ।

अयँ समुद्र उत विश्वभेषजः स्वाहाकृतस्य समु तृप्णुतर्भुवः ॥ स्वाहा ॥

उद् वयं तमसस्परि ॥ उदु त्यम् ॥ चित्रम् ॥ इमं मे वरुण ॥ तत् त्वा यामि ॥ त्वं नो अग्ने ॥ स त्वं नो अग्ने ॥ त्वमग्ने अयासि ॥ प्रजापते ॥

इमं जीवेभ्यः परिधिं दधामि मैषां नु गादपरो अर्थमेतम् ।

शतं जीवन्तु शरदः पुरूचीस्तिरो मृत्युं दधतां पर्वतेन ॥ स्वाहा ॥

इष्टेभ्यः स्वाहा वषडनिष्टेभ्यः स्वाहा । भेषजं दुरिष्ट्यै स्वाहा निष्कृत्यै स्वाहा । दौराध्यै स्वाहा दैवीभ्यस्तनूभ्यः स्वाहा ॥ ऋद्ध्यै स्वाहा समृद्ध्यै स्वाहा [TB 3. 7. 11. 1-4] ॥ २ ॥
॥ १० ॥

1 Ga °ति, Gb °तिर्  2 Gac om. वा

या सरस्वती विशोभगीना तस्यै ते[1] स्वाहा ॥ या सरस्वती वेशभगीना तस्यै ते स्वाहा ॥ इन्द्रोपानस्य वेशान् सुमनसः [2]सुजातान् कुरु स्वाहा ॥
यदकर्म यन्नाकर्म यदत्यगाम यन्नात्यगाम यदत्यरीरिचाम यन्नात्यरीरिचाम[3] तत् त्वं विष्णो यज्ञे[4] यज्ञं प्रतिष्ठापय स्वाहा ॥
यत इन्द्र भयामहे ततो नो अभयं कृधि । मघवञ्छग्धि तव तन्न ऊतये । विद्विषो विमृधो जहि ॥ स्वाहा ॥

स्वस्तिदा विशस्पतिर्वृत्रहा विमृधो वशी ।
वृषेन्द्रः पुर एतु नः स्वस्तिदा अभयंकरः ॥ स्वाहा ॥
आभिर्गीर्भिर्यदतो न ऊनमाप्यायय हरिवो वर्धमानः ।
यदा स्तोतृभ्यो महि गोत्रा रुजासि भूयिष्ठभाजो अधे ते स्याम ॥ स्वाहा ॥
अनाज्ञातं यदाज्ञातं यज्ञस्य क्रियते मिथु ।
अग्ने तदस्य कल्पय त्वँ हि वेत्थ यथातथम् ॥ स्वाहा ॥
पुरुषसंमितो यज्ञो यज्ञः पुरुषसंमितः ।
अग्ने तदस्य कल्पय त्वँ हि वेत्थ यथातथम् ॥ स्वाहा ॥
यत् पाकत्रा मनसा दीनदक्षा न यज्ञस्य मन्वते मर्तासः ।
अग्निष्टद्धोता क्रतुविद् विजानन् यजिष्ठो देवाँ ऋतुशो यजाति ॥ स्वाहा ॥ [TB 3. 7. 11. 4,5]

यदस्य कर्मणो ऽत्यरीरिचं यद् वा न्यूनमिहाकरम् ।
अग्निष्टत् स्विष्टकृद् विद्वान् सर्वँ स्विष्टँ सुहुतं करोतु मे ॥

अग्नये स्विष्टकृते सुहुतहुत आहुतीनां कामानाँ समर्धयित्रे स्वाहा **इति** प्राजापत्याम्[6] इत्[5] **समाँ हुत्वा ॥ १ ॥** ॥ ११ ॥

**अन्तर्वेद्यूर्ध्वस्तिष्ठन् ध्रुवया समिष्टयजुर्जुहोति**—देवा गातुविदः [1. 1. 13*u*] **इति प्रथमामाहुतिँ हुत्वा बर्हिरनुप्रहरति ॥ १ ॥** वाचि स्वाहा [l. c. *v*] **इति द्वितीयां** वाते धाः [l. c.] स्वाहा **इति तृतीयाम् ॥ २ ॥ होतृषदनाद् वेदिमभिस्तृणाति**

अभिस्तृणीहि परिधेहि वेदिं जामिं मा हिँसीरमुया शयाना ।
होतृषदना हरिताः सुवर्णा निष्का इमे यजमानस्य ब्रध्ने ॥ [TB 3. 7. 5. 13]

**इति ॥ ३ ॥ अन्तर्वेदि प्रणीता आसादयति**—को वो ऽयोक्षीत् स वो विमुञ्चतु

1 Gc om. त
2 Gc स॰
3 DGac om.
4 DGac यज्ञं
5 Gab अथ
6 Gb प्रजापते for प्राजापत्याम्

इति ॥ ४ ॥ ततः पत्नीं विमुञ्चति—इमं वि ष्यामि वरुणस्य पाशम् [1. 1. 10 *g*] इत्यादाय योक्त्रं पत्नी सहाप उपगृह्णीते ॥ ५ ॥ अञ्जलावस्यै पू[illegible] ॥ ६ ॥ आनीयमाने जपति—समायुषा सं प्रजया [l. c. *h*] इत्येताम् ॥ ७ ॥ मुखं विमृज्योत्तिष्ठति—पुष्टिमती पशुमती प्रजावती गृहमेधिनी भूयासम् इति ॥ ८ ॥ तत उपवेषमुत्करे पुरस्तात् प्रत्यञ्चँ स्थविमत उपगूहति—

यं देवा मनुष्येषूपवेषमधा[1]रयन् ।
ये अस्मदपचेतसस्तानस्मभ्यमिहा कुरु ॥
उपवेषोपविड्ढि नः प्रजां पुष्टिमथो धनम् ।
द्विपदो नश्चतुष्पदो ध्रुवाननपगान् कुरु ॥ [TB 3. 3. 11. 1, 2]

इति ॥ ९ ॥ योपवेषे शुक् सामुमृच्छतु यं द्विष्मः [l. c. 2] इति यं द्वेष्टि तस्य नाम गृह्णाति ॥ १० ॥ ॥ १२ ॥

अथास्मै नामगृह्य प्रहरति—

निरमुं नुद ओकसः सपत्नो यः पृतन्यति ।
निर्बाध्येन हविषेन्द्र एणं पराशरीत् ॥
इहि तिस्रः परावत इहि पञ्चजनाँ अति ।
इहि तिस्रो ऽति रोचना यावत् सूर्यो असद् दिवि ॥
परमां त्वा परावतमिन्द्रो नयतु वृत्रहा ।
यतो न पुनरायसि शश्वतीभ्यः समाभ्यः ॥ [l. c. 3, 4]

इति ॥ १ ॥ हतो ऽसाववधिष्मामुम् [l. c. 4] इति ब्रूयाद् यं द्विष्यात् ॥ २ ॥ सँस्थिते कपालानि विमुञ्चति—यानि घर्मे कपालानि [1. 1. 7 *k*] इति ॥ ३ ॥ एतयैव यजमानो ऽभि[2]मन्त्रयेत ॥ ४ ॥ सँस्थाप्य पौर्णमासीमिन्द्राय वैमृधाय पुरोडाशमेकादशकपालमनुनिर्वपति ॥ ५ ॥ तत्र य[3]थाकामी प्रक्रमे । प्रक्रमात् तु नियम्यते ॥ ६ ॥ सप्तदश सामिधेनीको यथाश्रद्धदक्षिणः ॥ ७ ॥ शर्धवत्यौ संयाज्ये ॥ ८ ॥ अपि वैनँ समानतन्त्रं पौर्णमास्यां निर्वपेत् ॥ ९ ॥ तमेतन्नित्यवदेके समामनन्ति काम्यवदेके ॥ १० ॥ तं यदा निर्वपेन्न तत ऊर्ध्वं विरमेत् ॥ ११ ॥ एवं विहिताभ्यां दर्शपूर्णमासाभ्यां यावज्जीवं यजते । त्रिँशतं वा वर्षाणि त्रिँशतं वा वर्षाणि ॥ १२ ॥ ॥ १३ ॥[4]

1 DGc °मवधा° for °मधा°
2 D नुम°
3 Gac य°
4 D adds the colophon : तृतीयः ॥ प्रथमः प्रश्नः समाप्तः ॥

**श्वो भूते यजमानो ब्रह्माणं वृणीते**—भूपते भुवनपते महतो भूतस्य पते ब्रह्माणं त्वा वृणीमहे [TB 3. 7. 6. 1] **इति ॥ १ ॥ वृतो जपति**—अहं भूपतिरहं भुवनपतिरहं महतो भूतस्य पतिर्देवेन सवित्रा प्रसूत आर्त्विज्यं करिष्यामि ॥ देव सवितरेतं त्वा वृणते बृहस्पतिं दैव्यं ब्रह्माणम् ॥ तदहं मनसे प्रब्रवीमि मनो गायत्रियै गायत्री त्रिष्टुभे त्रिष्टुब् जगत्यै जगत्यनुष्टुभे ऽनुष्टुप् पङ्क्त्यै पङ्क्तिः प्रजापतये प्रजापतिर्विश्वेभ्यो देवेभ्यो विश्वे देवा बृहस्पतये बृहस्पतिर्ब्रह्मणे ॥ ब्रह्म भूर्भुवः सुवः ॥ बृहस्पतिर्देवानां ब्रह्माहं मनुष्याणां बृहस्पते यज्ञं गोपाय [l. c. 1-3] **इत्युक्त्वापरेणाहवनीयमतिक्रम्य दक्षिणतो ब्रह्मसदनात् तृणं निरस्यति**—निरस्तः परावसुः **इति ॥ २ ॥ अप उपस्पृश्य ब्रह्मसदन आहवनीयमभिमुख उपविशति**—इदमहमर्वाग्वसोः सदने सीदामि ॥ प्रसूतो देवेन सवित्रा बृहस्पतेः सदने सीदामि ॥ तदग्नये प्रब्रवीमि तद् वायवे तत् सूर्याय तत् पृथिव्यै **इति ॥ ३ ॥　॥ १४ ॥**[1]

**तत्रैषो ऽत्यन्तप्रदेशो वाग्यत एव मन्त्रवत्सु कर्मसु भवति याथाकामी तूष्णींकेषु ॥ १ ॥ प्रणीतासु प्रणीयमानासु वाचं यच्छति ॥ २ ॥ आ हविष्कृतः परुषिपरुषि वाचं यच्छतीति विज्ञायते ॥ ३ ॥ अथैकेषां प्रातरनुवाक उपाकृते सामिधेनीषु प्रयाजानूयाजेषु स्तुतशस्त्रेष्विति वाचमेव यच्छेदिति ॥ ४ ॥ अथैकेषां यद्यृचा यदि यजुषा यदि साम्ना क्रियते वाचमेव यच्छेदिति ॥ ५ ॥ अथैकेषामन्यो ऽन्यस्मै वा ऋत्विजो यज्ञसंप्रदायं चरन्ति । यावद् वा ऋचार्त्विज्यं क्रियते होतृष्वेव तावद्यज्ञो भवति । यावद्यजुषाध्वर्युष्वेव तावद् यावत् साम्नोद्गातृष्वेव तावत् । अथ यत्र क्वच यज्ञस्य विहितं ब्रह्मण्येव तावद् यज्ञो भवति । तस्मादेतस्मिन्नन्तर्धौ ब्रह्मा वाचंयमः स्यात् ॥ ६ ॥ स यदि प्रमत्तो व्याहरेदेता एव व्याहृतीरभिव्याहरेत्**—भूर्भुवः सुवः **इति** वैष्णवीं **वाचम् ॥ ७ ॥ यज्ञो वै विष्णुर्यज्ञेनैव यज्ञं संतनोतीति विज्ञायते ॥ ८ ॥　॥ १५ ॥**[2]

**यत्रैनमामन्त्रयते** ब्रह्मन्नपः प्रणेष्यामि **इति तत् प्रसौति**—हिं प्रणय यज्ञम् ॥

देवता वर्धय त्वं नाकस्य पृष्ठे यजमानो अस्तु ।
सप्तर्षीणाँ सुकृतां यत्र लोकस्तत्रेमं यज्ञं यजमानं च धेहि ॥

ओं प्रणय **इति ॥ १ ॥ यत्रैनमामन्त्रयते** ब्रह्मन् प्रोक्षिष्यामि **इति तत् प्रसौति**—**हिं** प्राक्ष यज्ञम् ॥

देवता वर्धय त्वं [नाकस्य पृष्ठे यजमानो अस्तु ।
सप्तर्षीणाँ सुकृतां यत्र लोकस्तत्रेमं यज्ञं] यजमानं च धेहि ॥

1 D ॥ १ ॥　　2 D ॥ २ ॥

**ओं प्रोक्ष इति** ॥ २ ॥ **यत्रैनमामन्त्रयते** ब्रह्मन्नुत्तरं परिग्राहं परिग्रहीष्यामि **इति तत् प्रसौति**—

हिं बृहस्पते परिगृहाण वेदिँ स्वगा वो देवाः सदनानि सन्तु ।
तस्यां बर्हिः प्रथताँ साध्वन्तरहिँस्रा नः पृथिवी देव्यस्तु ॥
देवता वर्धय त्वं नाकस्य पृष्ठे यजमानो अस्तु ।
सप्तर्षीणाँ सुकृतां यत्र लोकस्तत्रेमं यज्ञं यजमानं च धेहि ॥

**ओं परिगृहाण इति** ॥ ३ ॥ **यत्रैनमामन्त्रयते** ब्रह्मन् प्रोक्षिष्यामि[1] **इति तत् प्रसौति**—हिं प्रोक्षै यज्ञम् **इत्येतया** ॥ ४ ॥ ॥ १६ ॥[3]

**यत्रैनमामन्त्रयते** ब्रह्मन् सामिधेनीरनुवक्ष्यामि **इति तत् प्रसौति**—हिं प्रजापते ऽनुब्रूहि यज्ञम् ॥

देवता वर्धय त्वं नाकस्य पृष्ठे यजमानो अस्तु ।
सप्तर्षीणाँ सुकृतां यत्र लोकस्तत्रेमं यज्ञं यजमानं च धेहि ॥

**ओमनुब्रूहि इति** ॥ १ ॥ **यत्रैनमामन्त्रयते** ब्रह्मन् प्रवरायाश्रावयिष्यामि **इति तत् प्रसौति**—हिं वाचस्पते वाचमाश्रावयैतामाश्रावय यज्ञं देवेषु मां मनुष्येषु ॥

देवता वर्धय त्वं नाकस्य पृष्ठे यजमानो अस्तु ।
सप्तर्षीणाँ सुकृतां यत्र लोकस्तत्रेमं यज्ञं यजमानं च धेहि ॥

ओमाश्रावय **इति** ॥ २ ॥ **यत्रास्मै प्राशित्रं परिहरति तत् प्रतीक्षते**—सूर्यस्य त्वा चक्षुषा प्रति पश्यामि [2. 6. 8. 5] **इति** ॥ ३ ॥ ऋतस्य पथा पर्येहि **इत्याह्रियमाणमभिमन्त्रयते** ॥ ४ ॥ **अप उपस्पृश्य प्रतिगृह्णाति**—देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रति गृह्णामि [1. c. 6] **इति** ॥ ५ ॥ **व्यूह्य तृणानि पुरस्ताद् दण्डं भूमौ प्रतिष्ठापयति**—पृथिव्यास्त्वा नाभौ सादयामि **इति** ॥ ६ ॥ **अवेक्षते**—सुपर्णस्य त्वा गरुत्मतश्चक्षुषावपश्यामि **इति** ॥ ७ ॥ **अथैनदङ्गुष्ठेनोपमध्यमया चाङ्गुल्यादायासंम्लेत्यावगिरति**—अग्नेस्त्वास्येन प्राश्नामि ब्राह्मणस्योदरेण बृहस्पतेर्ब्रह्मणा [2. 6. 8. 6, 7] ॥ इन्द्रस्य त्वा जठरे सादयामि **इति** ॥ ८ ॥ **अप आचम्य पुनरेवाप आचामति**—या अप्स्वन्तर्देवतास्ता इदँ शमयन्तु ॥ स्वाहाकृतं जठरमिन्द्रस्य गच्छ स्वाहा **इति** ॥ ९ ॥ ॥ १७ ॥[4]

**नाभिदेशमभिमृशति**—घसीना मे मा संपृक्थाः ॥ ऊर्ध्वं मे नाभेः सीद ॥ इन्द्रस्य त्वा

1 ? D प्रोक्ष्यामि
2 ? Thus all the mss.
3 D ॥ ३ ॥
4 Gac add आश्रावय
5 D ॥ ४ ॥

जठरे सादयामि **इति** ॥ १ ॥ **प्राणायतनानि संमृशति**—वाङ् म आसन् नसोः प्राणः [5. 5. 9*g*] इत्येतैर्यथारूपम् ॥ २ ॥ **अद्भिः पात्रं प्रक्षाल्य** …रयित्वा **प्राङ् निनयति** ॥ ३ ॥ दिशो जिन्व **इत्यपरं** …रयित्वाभ्यात्मं **निनयति**—मां जिन्व **इति** ॥ ४ ॥ **यत्रास्मै ब्रह्मभागं परिहरति तत्र पुरा सँस्थायाः प्राश्नीयात्** ॥ ५ ॥ **यत् किंच यज्ञे मृन्मयं भिद्येत तदभिमृशेत्**—

भूमिर्भूमिमगान्माता मातरमप्यगात् ।
भूयास्म पुत्रैः पशुभिर्यो नो द्वेष्टि स भिद्यताम् ॥

**इति** ॥ ६ ॥ **अन्तर्वेद्यन्वाहार्यमासन्नमभिमृशति**—ब्रह्मन् ब्रह्मासि ब्रह्मणे त्वाहुताय मा मा हिँसीरहुतो मह्यँ शिवो भव **इति** ॥ ७ ॥ **यत्रैनमामन्त्रयते** ब्रह्मन् प्रस्थास्यामः **इति तत् प्रसौति**—हिं देव सवितरेतत्ते प्राह तत् प्र च सुव प्र च यज बृहस्पतिर्ब्रह्मा [3. 2. 7 *ab*] ॥ स यज्ञं पाहि स यज्ञपतिं पाहि स मां पाहि [2. 6. 9. 3] ॥ ओं प्रतिष्ठ **इति** ॥ ८ ॥ **सो ऽत्रैवास्त आ यज्ञस्य सँस्थानात्** ॥ ९ ॥ **सँस्थिते यज्ञे यथान्ववेतर्**[2]पनिष्क्रम्याहव-**नीये समिधमादधाति**—नमः कृताय कर्मणे ऽकृतस्य कर्मणे नमः स्वाहा **इति** ॥ १० ॥ **आधायोपतिष्ठते**—

अयाडे् यज्ञं जातवेदा अदब्धो अन्तरः पूर्वो अस्मिन् निषद्य ।
सन्वन् सनिँ सुविमुचा विमुञ्च धेह्यस्मासु द्रविणं जातवेदो यच्च भद्रम् ॥

प्र णो…[3]भिवस्यो अस्मान् सं नः सृज सुमत्या वाजवत्या **इति** ॥ ११ ॥ **एवं विहितमेवास्येष्टिपशुबन्धेषु ब्रह्मत्वं भवति ब्रह्मत्वं भवति** ॥ १२ ॥ ॥ १८ ॥[4]

[5]**इति दर्शपूर्णमासे तृतीयः प्रश्नः** ॥[5]

---

1 Gab मृशम°

2 The mss. यास्य

3 D यच्चर्वास्य°, Ga यच्चान्द्य°, Gb यच्चम-स्य°, Gc धेच्चर्वास्य°

4 D ॥ ५ ॥

5–5 D द्वितीयः प्रश्नः ॥, Ga ॥ ३ ॥